॥ योगविषयः ॥
गुरुश्च गुरुपुत्रश्च ये चान्ये गुरुबान्धवाः ।
अन्येषाञ्च क्रमाज्ज्येष्ठास्तेषां पादौ नमाम्यहम् ॥ १॥

यादृशी ? भावनातीतं तं गुरुं प्रणमाम्यहम् ।
भ्रान्तश्च भ्रमते लोको निर्भ्रान्तः कृतनिश्चयः ॥ २॥

तस्य सिध्यन्ति पुरुषा आदिनाथे व्यवस्थिताः ।
कुलजातिसमायुक्तः सुचरित्रगुणान्वितः ॥ ३॥

गुरुभक्तियुतो धीमान् स शिष्य इति कथ्यते ।
अकुलेनादिनाथेन केजापूपीनवासिना ॥ ४॥

कृपयैव परं तत्त्वं मीननाथोऽपि बोधितः ।
मीननाथोऽपि सच्छिष्यं प्रत्युवाच समाहितः ॥ ५॥

त्वं गुरुस्त्वञ्च शिष्यश्च शिष्यस्य च गुरोरपि ।
नानयोरपि भेदोऽत्र समसिद्धिः प्रजायते ॥ ६॥

उमाशङ्करपुत्रोऽहं मीननाथो मुनीश्वरः ।
कथयामि परं तत्त्वं कुलाकुलविबोधकम् ॥ ७॥

आधारः स्वाधिष्ठानञ्च मणिपूरमनाहतम् ।
विशुद्धिराज्ञा कौलानि षट् चक्राणि शुभानि च ॥ ८॥

आधारश्च गुदे तस्थौ स्वाधिष्ठानञ्च लिङ्गके ।
मणिपूरं नाभिगतं हृदये चाप्यनाहतम् ॥ ९॥

विशुद्धिः कण्ठदेशे च आज्ञाचक्रं भ्रुवोर्मुखम् ।
चक्रभेदमिति ज्ञात्वा चक्रातीतं निरञ्जनम् ॥ १०॥

इडा वहति वामे च पिङ्गला वहति दक्षिणे ।
इडापिङ्गलयोर्मध्ये सुषुम्ना सुखरूपिणी ॥ ११॥

आधारे लिङ्गनाभौ हृदयसरसिजे तालुमूले ललाटे ।
द्वे पत्रे षोडशारे द्विदशदशदले द्वादशार्धे चतुष्के
नासान्ते बालमध्ये डफकठसहिते कण्ठदेशे स्वराणाम्
हं क्षं तत्त्वार्थयुक्तं सकलदलगतं वर्णरूपं नमामि ॥ १२॥

प्राणोऽपानः समानश्च उदानो व्यान एव च ।
पञ्चकर्मेन्द्रियैर्युक्ताः क्रियाशक्तिसमुद्यताः ॥ १३॥

नागः कूर्मश्च कृकरो देवदत्तो धनञ्जयः ।
पञ्चज्ञानेन्द्रियैर्युक्ताः बुद्धिशक्तिसमन्विताः ॥ १४॥

पावकश्शक्तिमध्यस्थो नाभिचक्रे रविः स्थितः ।
बन्धमुद्रा कृतास्सर्वे नासाग्रे तु सुलोचनम् ॥ १५॥

अकारो वह्निदेशे च उकारो हृदि संस्थितः ।
मकारश्चः भ्रुवोर्मध्ये वचनाच्च निबोधयेत् ॥ १६॥

ब्रह्मग्रन्थिरधष्कारे विष्णुग्रन्थिर्हृदि स्थितः ।
रुद्रग्रन्थिर्भ्रुवोर्मध्ये विमुच्यन्ते त्रयस्तथा ॥ १७॥

अकारो ब्रह्म इत्याहुः उकारो विष्णुरुच्यते ।
मकारो च शिवं साक्षाच्छान्तेश्शान्ततरं परम् ॥ १८॥

कण्ठसङ्कोचनं कृत्वा द्वे नाड्यौ स्तम्भयेद् दृढम् ।
रसना पिड्यमाना तु षोडशश्चोर्ध्वगामिनी ॥ १९॥

त्रिकूटं त्रिहठं चैव कोल्हाटं शिखरं तथा ।
त्रिशिखं वज्रमोङ्कार मूर्ध्वनासं भ्रुवोर्मुखम् ॥ २०॥

आकुञ्चयेद्रविञ्चैव पश्चान्नाडी प्रवर्तते ।
भेदे त्रिहठसङ्घट्टमुभयोश्शशिदर्शनम् ॥ २१॥

प्रणवा गुदनाला च नलिनी सर्पिणी तथा ।
बङ्कनालि क्षया शौरी कुण्डली कुण्डलाः स्मृताः ॥ २२॥

कुण्डलीं चालयेत् प्राणो भेदिते शशिमण्डले । var कुण्डली चालयेत् प्राणान्
सिध्यन्ति वज्रगुम्फानि नव द्वाराणि बन्धयेत् ॥ २३॥

सुमनः पावनारूढः स गाढं निर्गुणस्तथा ।
ब्रह्मस्थाननिनादेन शङ्खिन्यामृतवर्षिणी ॥ २४॥

षट्चक्रमण्डलोद्धारं ज्ञानदीपं प्रकाशयेत् ।

सर्वेषां स्नापनं देहे क्रियते देवतार्चनम् ॥ २५॥

चन्द्रामृतेन चिद्रुपमीश्वरं स्नाप्य भक्तितः ।
मनःपुष्पं तथा देयमर्चतेत्परमं शिवम् ॥ २६॥

आत्मरूपं तमालोक्य ज्ञानरूपं निरामयम् ।
दृश्यते देहरूपेण सर्वव्यापी निरञ्जनः ॥ २७॥

हंस हंस पदे वाक्यं प्राणिनां देहमाश्रितः ।
सम्प्राणापानयोर्ग्रन्थिरूपे ? ऽत्यभिधीयते ॥ २८॥

सहस्रमेकञ्च युतं षट्छतं चैव सर्वदा ।
उच्चारपदतो हंसः सोऽहमित्यभिधीयते ॥ २९॥

पूर्वभागे अधो लिङ्गं शङ्खिन्यां चैव पश्चिमम् ।
ज्योतिर्लिङ्गं भ्रुवोर्मध्ये रक्तशुक्लात्मकं शिवम् ॥ ३०॥

पूर्वपश्चिमदिग्भागे वज्रदण्डे व्यवस्थिते ।
द्वौ षष्टिभोगिनी स्थानं पश्चाल्लिङ्गं प्रकाशयेत् ॥ ३१॥

शीताशीतं परं स्थानं मेदोमज्जाभिपूरितम् ।
स्रवति ब्रह्मणः स्थानात् सिञ्चते भुवनत्रयम् ॥ ३२॥

सर्वव्याधिक्रियाकर्म वातपित्तसमन्वितम् ।
दशाष्टदोषरहितं मीननाथेन कथ्यते ॥ ३३॥

॥ इति मत्स्येन्द्रनाथविरचितं भक्तिसं ? सम्पूर्णम् ॥